# ब्रह्मस्तोत्रव्याख्यासहित:।

# सिद्धान्तविन्दुसार:।




गवर्णमेण्ट संस्कृत विद्यामन्दिराध्यापक

श्रीतारानाथ तर्कवाचस्पति

भट्टाचार्य्येण


संकलित:।



# SIDDHANTA VINDUSARA

And

# BRAMHASTOTRA VYAKHYA

By


TARANATHA TARKAUACHARPATI.

*Professor of Grammar Govt: Sanscrit College.*





CALCATTA.

PRINTED AT THE DWEIPAYANA PRESS.

1872.

# श्रीतत्सत्।

---

ब्रह्मात्मानं प्रपद्ये तं सर्व्वसन्तापनाशनम्।
वियदादिप्रपञ्चोऽयं यदज्ञानविजृम्भितः॥

असारसंसारनिवर्हणाय वेदान्तसिद्धान्तविबोधनाय।
श्रीशङ्कराचार्य्यगुरुर्हितैषी श्रीशङ्करांशात् प्रबभूव योऽसौ॥

स खलु भगवान् परमकारुणिकः परमहंसपरिव्राजकाचार्य्योत्तंसः श्रीमत्पूज्यपादः शङ्कराचार्य्यः प्रथमं श्रुतिस्मृतिन्यायरूपप्रस्थानत्रये उपनिषत्सूत्रगीतादिषु षोड़शसु स्थानेषु भाष्यं विधाय ततः सारांशमाकृष्य परमहितोपदेशेन साक्षात् परम्परया च सर्व्वजीवानुद्दिधीर्षुरनायासेन मन्दधियां वेदान्तसिद्धान्तबोधनाय दश श्लोकवरान् प्रणिनाय। मधुसूदनसरस्वतीभिश्च तानधिकृत्य सिद्धान्तविन्दुनामा सन्दर्भो निरमायि सोऽपि च गौड़ब्रह्मानन्देन न्यायरत्नावलीसमाख्यया व्याख्यया समुद्भासि तद्ग्रन्थयोर्बहुविस्तारतया दुर्बोधतया च मन्दधियां प्रवृत्तिविरहमाकलय्य तयोः सारांशमाकृष्य संक्षेपेण तान् श्लोकान् श्रीतारानाथशर्म्माहम् व्याख्यातुमारभे।

अयं हि वेदान्तसिद्धान्तः जीवब्रह्मणोः परमार्थतोऽभेदेऽपि चिदात्मनि ब्रह्मणि अज्ञानाभेदाध्यासात् अज्ञानविशिष्टमिव चैतन्यमाभाति। अज्ञानविशिष्टे च चैतन्ये ऽहङ्कारा-

ध्यासः। अहङ्कारविशिष्टे च चैतन्ये कामसंकल्पादीना-महङ्कारधर्म्माणामिन्द्रियधर्म्माणाञ्च काणत्वबधिरत्वादीनामध्यासः। तद्विशिष्टे च स्थूलदेहाध्यासः स च स्थूलदेहावान्तरधर्म्मपुरस्कारेणैव अहं मनुष्यः अहं क्षत्रियः अहं शिशुर्युवेत्यादिकः न तु स्वरूपतोऽहं देह इत्याकारकस्तथानुभवाभावात्। तद्विशिष्टे च स्थौल्यादीनां देहधर्म्माणामध्यासः। तद्विशिष्टे च पुत्रभार्य्यादीनां साकल्यवैकल्यधर्म्माध्यासः। एवं चैतन्यस्याप्यज्ञानादिषु देहपर्य्यन्तेष्वभेदाध्यासः तद्धर्म्माणाञ्चानन्दादीनामहङ्कारादिषु संसर्गतोऽध्यासः। अध्यासो नाम अतस्मिंस्तद्बुद्धिः। आनन्दस्यैव च परमप्रेमास्पदत्वेन तदध्यासव्यवधानतारतम्यात्तेषु प्रेमतारतम्यम्। अतएव वार्त्तिकास्मृति।

"वित्तात् पुत्रः प्रियः पुत्रात् पिण्डः पिण्डात्तथेन्द्रियम्।
इन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रिय" इत्युक्तम्।

पिण्डः स्थूलशरीरं प्राणो मनः। इन्द्रियाणां देहाद्यथा प्रियत्वञ्च शस्त्रद्व्यर्घाद्याघातावातादौ चक्षुषो निमीलदर्शनादनुभवसिद्धम्। एवं चिदचिद्ग्रन्थिरूपोऽध्यासः परस्पराध्यासात्। स च पूर्व्वपूर्व्वाध्यासमूलएवोत्तरोत्तरमहङ्काराध्यासो बीजाङ्कुरादिवदनादिः।

एवमध्यासे स्थिते एकस्याप्यात्मनो जीवेश्वरादिव्यवस्था मानमेयादिप्रतिकर्म्मव्यवस्था चोपपद्यते। तथा हि अज्ञानोपहित आत्माऽज्ञानाभेदापन्नश्चिदाभासाविवेकादन्तर्यामी

साक्षी जगत्कारणमिति च कथ्यते। बुद्ध्युपहित आत्मा तत्तादात्म्यापन्नश्चिदाभासाविवेकाज्जीवः कर्त्ता भोक्ता प्रमातेति च कथ्यते। प्रतिदेहञ्च बुद्धीनां भिन्नत्वात् तद्गतचिदाभासभेदेन तदविविक्तं चैतन्यमपि भिन्नमिव प्रतीयते। अज्ञानस्य तु सर्व्वत्राभिन्नत्वात् तद्गतचिदाभासभेदाभावेन तदविविक्तसाक्षिचैतन्यस्य न कदाऽपि भिद्यमानत्वमस्ति। जीवस्य चोपाधिनाऽभिभूतत्वात् संसारोपलब्धिः परमेश्वरस्य तूपाधिवशित्वात् सर्व्वज्ञत्वादिकमुपपद्यते। तथाहि चैतन्यस्य प्रदीपवत् स्वसंबद्धसर्व्वावभासकत्वात् जगदुपादानभूतं चैतन्यं प्रमाणप्रवृत्तिमनपेक्ष्यैव सर्व्वदा सर्व्वं भासयत् सत्सर्व्वज्ञं भवति। जीवस्य तु बुद्ध्या परिच्छिन्नत्वेन सर्व्वसंबन्धाभावात् प्रमाणप्रवृत्त्यैव तत्सम्बन्धे सति भासकत्वं तथाच चिदभिव्यक्तियोग्येन येन येन मनसा यदा यदा यद्यत् सबद्धं भवति तदा तदेव तदवच्छिन्नो जीवोऽनुभवतीति न सर्व्वावभासकत्वम्। इयमत्र प्रक्रिया। शरीरमध्यस्थितः सर्व्वशरीरव्यापकः सूक्ष्मपञ्चभूतारब्धोऽन्तःकरणाख्योऽविद्यापरिणामी दर्पणादिवदतिस्वच्छः कश्चित् पदार्थो नेत्रादिद्वारा निर्गत्य योग्यान् घटादिविषयान् व्याप्य द्रुतताम्रादिवत् तत्तदाकारो भवति। तस्य च सौरालोकादिवत् झटित्येव सङ्कोचविकाशावुपपद्येते। स च सावयवत्वात् परिणममानो देहमध्ये घटादौ च सम्यग्व्याप्य व्यवतिष्ठते। तत्र देहावच्छिन्नोऽन्तःकरणभागोऽहङ्काराख्यः कर्त्तेत्युच्यते। देह-

विषयमध्यवर्त्ती दण्डायमानोऽन्तःकरणभागो वृत्तिज्ञानाख्या क्रियेत्युच्यते। विषयव्यापकस्तद्भागो विषयस्य कर्म्मत्वसम्पादकमभिव्यक्तियोग्यत्वमित्युच्यते। तस्य च त्रिभागस्यान्तःकरणस्यातिस्वच्छत्वात् तत्र तत्र चैतन्यमभिव्यज्यते। तस्याप्यभिव्यक्तस्य चैतन्यस्यैकत्वेऽप्यभिव्यञ्जकान्तःकरणभागत्रयभेदात्त्रिधा व्यपदेशः। यथा कर्त्तृभागावच्छिन्नश्चिदंशःप्रमाता। क्रियाभागावच्छिन्नः प्रमाणम्। विषयगतयोग्यत्वभागावच्छिन्नश्चिदंशः प्रमितिः। प्रमेयन्तु विषयगतं ब्रह्म चैतन्यमेव। तदेव ज्ञातं सत् फलम्। अन्तःकरणवृत्तिश्चावरणाभिभवार्था। तथाचान्तःकरणवृत्त्यभावसहितमज्ञानं सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थं भवति तदेवावरणमित्युच्यते। सत्यान्तु वृत्तौ तदभिभवात् विद्यमानमप्यविद्यमानसमं भवतीत्यभिभूतमित्युच्यते। तच्चाज्ञानं ब्रह्माभेदसाक्षात्कारादेव समूलं नश्यति तरति शोकमात्मविदित्यादिश्रुतेः। तत्साक्षात्कारश्च वेदान्तश्रवणमनननिदिध्यासनादिभिरेव जायते आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतौ श्रवणादीनामात्मसाक्षात्कारसाधनतयाऽभिधानात्। श्रवणं च वेदान्तवाक्यश्रवणोत्तरं तत्तात्पर्य्यावधारणं तात्पर्य्यावधारणञ्च विचारसाध्यमिति ब्रह्मज्ञानाय विचारारम्भः शास्त्रकृद्भिः प्रदर्शितः। विचारश्च परपक्षनिराकरण पूर्व्वकस्वपक्षव्यवस्थापनापरपर्य्यायः वादरूपः। एवञ्च विचार्य्यस्य जीवब्रह्माभेदस्य तत्त्व-

मस्यादिवाक्यमात्रप्रतिपाद्यस्य वाक्यार्थज्ञानसाध्यतया तत्-त्वतत्त्वंपदयोरर्थावधारणे कर्त्तव्येऽहंप्रत्ययविषयस्य त्वंपदवाच्यस्य प्रथमतो विचार आवश्यकः । तत्र चाहंप्रत्ययालम्बनतया देहादिषु चार्व्वाकाद्युद्भावितेषु पक्षेषु जीवब्रह्माभेदप्रतिद्वन्द्विषु जागरूकेषु कतमः पक्षः श्रेयानित्यत्र संशयमाकलय्य परपक्षनिराकरणपूर्व्वकं स्वपक्षं व्यवस्थापयति ।

न भूमिर्न तोयं न तेजो न वायु-
र्न खं नेन्द्रियं वा न तेषां समूहः ।
अनैकान्तिकत्वात् सुषुप्त्येकसिद्ध-
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ १ ॥

यद्यस्मात् अहंप्रत्ययालम्बनस्यात्मनो न भूम्यादिस्वरूपता सम्भवति तत् तस्मात् अहम् अहंप्रत्ययालम्बनमेकोऽद्वितीयः सजातीयविजातीयद्वितीयरहित इति यावत् अवशिष्टः सर्व्वनिषेधावधिभूतः सर्वद्वैतबाधेऽप्यबाधित इत्यर्थः शिवः परमानन्दबोधस्वरूपस्तस्यैव परमप्रेमास्पदत्वेन सर्व्वमङ्गलरूपत्वात् केवलः निर्द्धर्मकः तथा चाद्वितीयः सर्वधर्म्मरहितः परमानन्दबोधस्वरूप एवाहं प्रत्ययविषयो नान्य इति वेदान्तपक्ष एव श्रेयान् । एतदुपपादयितुमितरमतानि निराकरोति न भूमिरिति । तत्र चार्व्वाका मन्यन्ते जड़स्वभावस्यापि भूतस्य

मदाकारपरिणतस्यान्नस्य मादकत्ववत् देहाकाराकारपरिणतत्वे ज्ञातृत्वं तदेवाहंप्रत्ययालम्बनं स्थूलोहं जानामीत्यनुभवात् । भृटिपुञ्जस्यैव घटादिस्वरूपतयाऽवयव्यनङ्गीकारात् पञ्चमतत्त्वाभ्युपगमप्रसङ्गेन संयोगानङ्गीकाराच्च अन्यस्य संहन्तुरभावात् संघातानुत्पत्तेः भूम्यादेः प्रत्येकमेव विनिगमनाभावाद्दिहरूपतया प्रत्येकमेव ज्ञातृत्वमिति ।

तद्दूषयति न भूमिरित्यादि अहमिति सर्व्वत्र नञा सम्बध्यते । या भूमिः सा नाहं यश्चाहं स न भूमिरित्यन्योन्यात्मकतानिषेधः । एवं न तोयमित्यादावपि ।

माध्यमिकमतं निराकरोति न खमिति । ते हि मन्यन्ते सर्व्वं क्षणिकं विज्ञानरूपमेव तच्च मिथ्यैव क्षणिकभावनया शून्य भावनया चात्महानमेव मोक्षइति तदेतद्विज्ञानरूपात्ममिथ्यामतमेव शून्यवादः । तदेतद्दूषयति न खं न शून्यमहंप्रत्ययालम्बनमित्यर्थः ।

चार्व्वाकैकदेशिमतं दूषयति नेन्द्रियमिति । ते हि मन्यन्ते मृते देहे ज्ञातृत्वाभावेन देहस्यात्मत्वाभावात् इन्द्रियमेवात्मा अहं पश्यामीत्यादिव्यवहारात् काणोऽहमित्याद्यनुभवाच्च । तत्रापि सर्व्वापेक्षया श्रेष्ठत्वात् चक्षुरेव ज्ञातृ तदभावे श्रोत्रमित्यादिक्रमेण प्रत्येकमथवा मिलितान्येव ज्ञातॄणि । तानि च यावन्ति यत्र शरीरेऽआमरणान्तं सम्भवन्ति तावन्त्येव ज्ञातॄणीति । तत्राप्येकमेव चक्षुः श्रोत्रं वा ज्ञातृ अन्यानि तु आलोचनात्मकनिर्व्विकल्पकसाधनानि । तत्रापि सर्व्वे-

न्द्रिय प्रवर्त्तकत्वात् अन्येन्द्रियाऽभावेऽपि सत्त्वाच्च मन एव ज्ञातृ इति तदवान्तरमतम्। मनोरूपेन्द्रियस्य ज्ञातृत्वनिराकरणेनैव तद्वृत्तिविशेषरूपक्षणिकविज्ञानानामात्मत्वं निराकृतं वेदितव्यम्।

तथाहि चत्वारः खलु सौगताः सौत्रान्तिकाः वैभाषिकाः योगाचाराः माध्यमिकाश्चेति। तत्र सौत्रान्तिका मन्यन्ते घटपटादयो वहिर्विषयाः सर्व्वेऽपि नित्यानुमेयाः घटाद्याकारे ज्ञाने घटादीनां प्रतिबिम्बमुपलभ्य तत्प्रतिबिम्बं बिम्बपूर्व्वकं प्रतिबिम्बत्वात् दर्पणस्थमुखादिप्रतिबिम्बवदिति बिम्बस्थानीयघटादीनामनुमितिर्जायते इति।

वैभाषिकास्तु घटादीनां प्रत्यक्षं नापलपन्ति भ्रमस्थले शुक्त्यादौ रजताद्यभावेऽपि ज्ञानरूपमेव रजतमुत्पद्यते तत्रैव इदमादेस्तादात्म्याध्यास इत्याहुः।

योगाचारास्तु मन्यन्ते घटादिकं सर्व्वं ज्ञानमेव वहिरर्थस्य त्रुटिसमूहरूपत्वेन स्थौल्यादिबुद्ध्यनुपपत्तेः। तथाहि कपालद्वयमेव घटः कपालिकाद्वयमेव कपालमित्येवं त्रुटिपर्य्यन्तं विचारे त्रुटेरन्यत् किमपि नास्तीत्येवं प्राप्ते त्रुटेरप्रत्यक्षत्वेन घटादीनामप्रत्यक्षत्वापत्तिः व्यवहारस्य सर्व्वः प्रत्यक्षविषयः। घटादीनामवयविरूपत्वे अवयवाद्भिभिन्नतया द्विगुणगुरुत्वाद्युपलब्धेः संयोगविभागान्यतरस्य च प्रसङ्गात्। तादात्म्यजातीयस्य सम्बन्धस्य क्लृप्तत्वात् तादात्म्यान्यस्य च ज्ञानविषययोः सम्बन्धस्य कल्पने गौरवाच्च घटादिज्ञाना-

त्वक्रमिथ्याकार एव ज्ञानस्य निरंशत्वात् विरुद्धनानारूपत्वानुपपत्तेर्न वास्तव इति।

माध्यमिकास्तु प्रमाणप्रमितिप्रमात्राकारारोपिविज्ञानस्यैव कल्पितः आकारः। तत्र प्रमेयप्रकाशनं व्यवहारोपधायकत्वरूपं प्रमितिः। व्यवहारानुकूला शक्तिः प्रमाणम्। तदाश्रयः प्रमाता। पूर्व्वपूर्व्वक्षणादेवोत्तरोत्तरं ज्ञानमुत्पद्यते सुषुप्ते तु ज्ञानलेशस्याप्यभावादकस्मादेव जागरेऽहमिति धीर्ज्ज्ञायते बौद्धाधिकारे तु सुषुप्तावप्यालय विज्ञानं तिष्ठतीत्येकीयमतत्वेनोक्तम्। सर्व्वं च ज्ञानं स्वविषयकं न तु ज्ञानान्तरविषयः अनवस्थापत्तेः क्षणिकानां भिन्नकालिकत्वेन विषयविषयिभावरूपसम्बन्धासम्भवात्। विशुद्धक्षणिकविज्ञान भावनया तदाकारारूपप्रवेशो मोक्षः। उक्तभावनारूपस्य जीवसन्तानस्थस्य यस्मिन् विशुद्धविज्ञाने हेतुत्वं तस्येश्वरसन्तानस्थेन तात्कालिकेन क्षणिकेन विशुद्धविज्ञानेन लाघवादैक्यस्वीकारात् मुक्तजीवेश्वरसन्तानयोरैक्यसंपत्त्या जीवस्येश्वरसन्ताने प्रवेश इत्युच्यते संसारस्थनानाजीवस्थानां विज्ञानानां तु नैकसन्तानप्रविष्टतापत्तिर्मिथो विलक्षणत्वात् तत्र सन्तानानां भिन्नकालगतानामिव सुषुप्ति पूर्व्वापरावधिकत्वेन तत्तज्ज्ञानानां कार्य्यकारणभावानापन्नत्वाच्चेति मन्यन्ते।

चार्व्वाकादिनास्तिकानां मते भूतचतुष्टयमेव तत्त्वं तदपि क्षणिकं यत् सत् तत्क्षणिकमिति नियमात्। तथाहि यस्य यत्र सामर्थ्यं तस्य तत्साधने विलम्बो नास्ति सति च

विलम्बे सामर्थ्यमेव न स्यात्। तथा च यस्य यावत्सु कार्य्येषु सामर्थ्यं प्रथमक्षणस्थितेन तेन तावतां सर्व्वेषामेव द्वितीयक्षणे कार्य्याणामुत्पादात्तृतीयक्षणे न कस्यचित् स्थितिःकार्य्यकारित्वरूपसत्त्वस्य तृतीयक्षणेऽसत्त्वात्। वस्तुनः सत्त्वञ्च कार्य्यकारित्वं तस्मात् सर्व्वं सत् क्षणिकम्। यत्तु अलीकं तस्य कार्य्यकारित्वाभावेन सत्त्वाभावादुक्तरीत्या न क्षणिकत्वमिति स्थिरत्वमेव तस्य च प्रमाणागोचरत्वेऽपि विकल्पधीविषयत्वात् व्यवहारः। तथाचावरणाभाव रूपाकाशस्याभावत्वेनालीकत्वादसत्त्वस्थिरत्वयोरावकाश्यकत्वान्न तत्वान्तररूपतेति। एवञ्च मनोनिराकरणेन मनोवृत्तिज्ञानात्मनां तत्तन्मतसिद्धानां निरासः।

एवं प्रत्येकं भूतादीनामात्मत्वपक्षान् निरस्य समुदितानां तथात्वमपि निराकरोति न तेषां समूह इति। तेषां भूम्यादीनाम् इन्द्रियाणां भूतेन्द्रियाणाञ्च समूहस्तत् कृतः संघातो वानात्मा प्रत्येकावृत्तेः समुदायावृत्ति त्वनियमेन भूतानामात्मत्वनिरासेनैव तत्संघातस्यात्मत्वनिरास इति भावः। तत्राप्ययं विशेषः सर्व्वेन्द्रियव्यापारविशिष्टः प्राण एवात्मा अहंश्वसिमीत्यनुभवात् प्राणस्यैव श्वासप्रश्वासक्रियासम्भवा दित्यपरे मन्यन्ते। तेषामपि मतं प्राणस्य भौतिकत्वेन निरासः। एवं मनसोऽपि भौतिकत्वपक्षेऽप्येतस्मादेव निरासः।

दिगम्बरास्तु अर्हन्नामा नित्यसिद्धः पुरुषस्तत्कृतशास्त्रा-

त्मकमिथ्याकार एव ज्ञानस्य निरंशत्वात् विरुद्धनानारूपत्वानुपपत्तेर्न वास्तव इति।

माध्यमिकास्तु प्रमाणप्रमितिप्रमात्राकारारोपिविज्ञानस्यैव कल्पितः आकारः। तत्र प्रमेयप्रकाशनं व्यवहारोपधायकत्वरूपं प्रमितिः। व्यवहारानुकूला शक्तिः प्रमाणम्। तदाश्रयः प्रमाता। पूर्व्वपूर्व्वक्षणादेवोत्तरोत्तरं ज्ञानमुत्पद्यते सुषुप्ते तु ज्ञानलेशस्याप्यभावादकस्मादेव जागरेऽहमिति धीर्ज्जायते बौद्धाधिकारे तु सुषुप्तावप्यालय विज्ञानं तिष्ठतीत्येकीयमतत्वेनोक्तम्। सर्व्वं च ज्ञानं स्वविषयकं न तु ज्ञानान्तरविषयः अनवस्थापत्तेः क्षणिकानां भिन्नकालिकत्वेन विषयविषयिभावरूपसम्बन्धासम्भवात्। विशुद्धक्षणिकविज्ञान भावनया तद्धारारूपप्रवेशो मोक्षः। उक्तभावनारूपस्य जीवसन्तानस्थस्य यस्मिन् विशुद्धविज्ञाने हेतुत्वं तस्येश्वरसन्तानस्थेन तात्कालिकेन क्षणिकेन विशुद्धविज्ञानेन लाघवादैक्यस्वीकारात् मुक्तजीवेश्वरसन्तानयोरैक्यसंपत्त्या जीवस्येश्वरसन्ताने प्रवेश इत्युच्यते संसारस्थनानाजीवस्थानां विज्ञानानां तु नैकसन्तानप्रविष्टतापत्तिर्म्मिथो विलक्षणत्वात् तत्र सन्तानानां भिन्नकालगतानामिव सुषुप्ति पूर्व्वापरावधिकत्वेन तत्तज्ज्ञानानां कार्य्यकारणभावानापन्नत्वाच्चेति मन्यन्ते।

चार्व्वाकादिनास्तिकानां मते भूतचतुष्टयमेव तत्त्वं तदपि क्षणिकं यत् सत् तत्क्षणिकमिति नियमात्। तथाहि यस्य यत्र सामर्थ्यं तस्य तत्साधने विलम्बो नास्ति सति च

विलम्बे सामर्थ्यमेव न स्यात् । तथा च यस्य यावत्सु कार्य्येषु सामर्थ्यं प्रथमक्षणस्थितेन तेन तावतां सर्वेषामेव द्वितीयक्षणे कार्य्याणामुत्पादात्तृतीयक्षणे न कस्यचित् स्थितिःकार्य्यकारित्वरूपसत्त्वस्य तृतीयक्षणेऽसत्त्वात् । वस्तुनः सत्त्वञ्च कार्य्यकारित्वं तस्मात् सर्व्वं सत् क्षणिकम् । यत्तु अलीकं तस्य कार्य्यकारित्वाभावेन सत्त्वाभावादुक्तरीत्या न क्षणिकत्वमिति स्थिरत्वमेव तस्य च प्रमाणागोचरत्वेऽपि विकल्पधीविषयत्वात् व्यवहारः । तथाचावरणाभाव रूपाकाशस्याभावत्वेनालीकत्वादसत्त्वस्थिरत्वयोरावकाश्यकत्वान्न तत्वान्तररूपतेति । एवञ्च मनोनिराकरणेन मनोवृत्तिज्ञानात्मनां तत्तन्मतसिद्धानां निरासः ।

एवं प्रत्येकं भूतादीनामात्मत्वपक्षान् निरस्य समुदितानां तथात्वमपि निराकरोति न तेषां समूह इति । तेषां भूम्यादीनाम् इन्द्रियाणां भूतेन्द्रियाणाञ्च समूहस्तत् कृतः संघातो वानात्मा प्रत्येकावृत्तेः समुदायावृत्तित्वनियमेन भूतानामात्मत्वनिरासेनैव तत्संघातस्यात्मत्वनिरास इति भावः । तत्राप्ययं विशेषः सर्व्वेन्द्रियव्यापारविशिष्टः प्राणएवात्मा अहंश्वसिमीत्यनुभवात् प्राणस्यैव श्वासप्रश्वासक्रियासम्भवा दित्यपरे मन्यन्ते । तेषामपि मतं प्राणस्य भौतिकत्वेन निरासः । एवं मनसोऽपि भौतिकत्वपक्षेऽप्येतस्मादेव निरासः ।

दिगम्बरास्तु अर्हन्नामा नित्यसिद्धः पुरुषस्तत्कृतशास्त्रा-

नुयायित्वादार्हताः मन्यन्ते । देहसमानपरिमाण आत्मा देहातिरिक्तः । महान्तं देहं त्यक्त्वा न्यूनदेहग्रहणेऽप्यात्मनो न नाशः परिमाणभेदेपि द्रव्यस्य धर्म्मिणोऽविनाशात् । आत्मा च सततोर्द्ध्वगतिस्वभावोऽपि कर्म्मपाशेन वद्धत्वात् न संसारकाले ऊर्द्ध्वं गच्छति कर्म्मणामत्यन्तोच्छेदे तु सततोर्द्ध्वगतिं लभते सैव मोक्षइति । तदेतन्मतं समूह पदेनैव निरासः तन्मत जन्मसंस्कारकर्म्मादिसमूहेनैवात्मत्वलाभात् ।

वैशेषिकादयस्तु तन्न सहन्ते । ते हि मन्यन्ते आत्मनः सुखदुःखयोगात्तद्धेतुभूतविहितनिषिद्धक्रियाकर्त्तृत्वमावश्यकम् स च ज्ञानस्वरूपात् भिन्नः अहं जानामीति ज्ञानाश्रयत्वेनानुभवात् ज्ञानाश्रयः । तस्य च सर्व्वमूर्त्तसंयोगित्वरूपं विभुत्वमेव । अणुपरिमाणत्वे देहव्याप्त्यभावेन युगपन्नानावयवावच्छिन्नसुखादिज्ञानं न स्यात् न स्याच्च प्रत्यक्षविषयता तस्य, प्रत्यक्षं प्रति महत्त्वस्य कारणत्वात् । मध्यमपरिमाणत्वे च सावयत्वेन जन्यत्वापत्त्या जन्यभावत्वेन च विनाशित्वापत्तिः । अतः परिशेषात् परममहत्त्वाश्रयत्वेन विभुत्वम् । तस्य च देहादि भिन्नत्वेन ज्ञानात् परिपक्वादत्यन्तकर्म्मोच्छेदेनात्यन्तदुःखो च्छेदरूपो मोक्षइति ।

भाट्टा अपि प्रायशस्तथैव मन्यन्ते । इयांस्तु विशेषः नित्यसुखसाक्षात्कारएव मोक्षः मोक्षकाले चक्षुरादि विच्छेदेऽपि मनसो विच्छेदास्वीकारात् कर्म्मरूपस्य प्रतिवन्धकस्योच्छेदेन नित्यसुखविशिष्टमात्मानं मनसैव साक्षात क-

रोति। आत्मनस्तु अंशद्वयमस्ति चिदचिद्रूपं तत्र चिदंशेन द्रष्टृत्वं सोऽहमिति प्रत्यभिज्ञाविषयत्वञ्च। अचिदंशेन ज्ञानसुखादिरूपविनाशित्वं मामहं जानामीति ज्ञेयत्वं ज्ञानरूपातीन्द्रियव्यापारेण विषयनिष्ठज्ञाततारूपसंवित्कर्त्तृत्वं चेति।

एवञ्च कर्त्तृत्वभोक्तृत्वविशिष्टस्य च देहातिरिक्तत्वेऽपि कामसंकल्पविचिकित्सादीनधिकृत्य श्रुतौ एतत् सर्व्वं मन एवेति मनोधर्म्मत्वकथनात् कर्त्तृत्वस्य मनोधर्म्मत्वेन मनोनिरासे नैव निरासः।

सांख्याः पातञ्जलाश्च मन्यन्ते भोक्तैव केवल बोधात्मकः असङ्गस्वप्रकाशकूटस्थचिदात्मकआत्मा न तु कर्त्ता। सुखदुःखाभ्यां बुद्धिधर्म्माभ्यामविवेकोपलक्षितानुभवस्वरूपभोक्तृत्वमेव तस्य नतु कर्त्तृत्वं तथाच बुद्धिरेव कर्त्री तदविवेकादात्मनः कर्त्तृत्वव्यवहारः सर्व्वत्रैव भ्रमे विषययोरसंसर्गाग्रहात् संसर्गव्यवहारात्। धर्म्मधर्म्मिज्ञानयोर्भिन्नत्वेऽपि भेदाग्रहात् ज्ञानैकत्वव्यवहारः वास्तवं तु ज्ञानद्वयं न तु विशिष्टमेकज्ञानमन्यथाख्यातानभ्युपगमात्। असंसर्गाग्रहस्य दोषात्। एवञ्चासंसर्गाग्रहणेन न कस्यापि बाध इति लाघवम्। तस्य च भोक्तुरात्मनो बुद्धिविवेकज्ञानेन संप्रज्ञातासंप्रज्ञातसमाधिपरिपाकपर्य्यन्ते नाविवेकनिवृत्त्या दुःखात्यन्तोच्छेदो मोक्ष इति।

भोक्तृत्वमात्मनो नानुभवस्वरूपत्वं भोग्यस्यापि ज्ञानाविवेकात् भोक्तृत्वापत्तेः। किन्तु सुखदुःखसंसृष्टानुभवरूपत्वं

तथा च भौतिकमनःपरिणामसुखादिसंसृष्टत्वेन आत्मनोऽपि भौतिकत्वापत्त्या नाहंप्रत्ययालम्बनत्वं कर्तृत्वस्येव सुखदुःखादेरपि मनोधर्म्मत्वेन मनोनिरासेनैव तन्निरासः।

एवं भूम्यादिभिन्नत्वरूपं साध्यं निर्द्दिश्य सर्व्वोपयोगिहेतुमाह अनैकान्तिकत्वादिति व्यभिचारित्वात् सर्व्वेषुसंवध्य वर्त्तते एवेति नियमरहितत्वात् किञ्चिद्देशकालवस्तुवृत्त्यभाव प्रतियोगित्वात् विनाशित्वादिति यावत्। तथाहि देशकालपरिच्छिन्नानां घटादीनामभावप्रतियोगितयाऽनात्मत्वम्आत्मनस्तु देशकालापरिच्छिन्नतया अभावाप्रतियोगित्वम्। न च तस्य ध्वंसप्रागभावौ प्रमाणेन ग्रहीतुं शक्येते स्वेनैव स्वाभाव ग्रहणे कर्त्तृकर्म्मविरोधात्। ग्राह्यस्याभावस्यतद्ग्राहकस्यात्मन एकदाऽभावात् ग्रहणासम्भवः। ग्राहकात्मसत्त्वे च न तदभावग्रहण सम्भव इति नात्माऽभावप्रतियोगी। घटादयस्तु तद्भिन्ना नैवंविधा इति भावः।

तस्यात्मन एकत्वेऽपि सुखदुःखाद्याश्रयाणामन्तःकरणानां भेदेनात्मभेदव्यवस्था। ध्वंसप्रागभावाप्रतियोगित्वेनात्मनो नित्यत्वम्। सुषुप्ते च गाढ़मूढ़ोऽहमासं न किञ्चिद्वेदिषमिति सुप्तोत्थितस्य स्मरणदर्शनेऽपि बोधरूपस्यात्मनो न तत्राभावकल्पना सुषुप्तिसाक्षिचैतन्यस्य तदापि सत्त्वादन्यथा गाढ़मढ़ोऽहमिति स्मरणानुपपत्तेः स्मरणस्यानुभवपूर्व्वकत्वनियमेन सुषुप्तिकालेऽनुभवासत्त्वे तदुत्तरं कथं स्मरणं स्यादित्येतन्मनसि निधायाह सुषुप्तैकसिद्ध इति तथा

च मातृमितिमेयानां सुषुप्तावभावेऽपि तदभावसाक्षित्वेन-तन्यरूपात्मनोऽबाधितत्वात् अविद्याकल्पितजीवस्यानित्यत्वेऽपि जीवसाक्षिरूपकूटस्थचैतन्यस्य सततं भासमानत्वात् नित्यत्वं तमेव भान्तमनुभाति सर्व्वं तस्य भासा सर्व्वमिदं विभातीति श्रुत्वा तस्य सर्व्वभासकत्वावगमात् न द्रष्टुर्दृष्टेविपरिलोपइति श्रुतया च तस्य दृष्टिरूपभासनस्य नित्यत्वावगमात्॥ १ ॥

ननु तादृशस्यात्मनो निर्द्धर्म्मकत्वे प्रमाणादिव्यवहारस्याध्यासमूलकत्वं वाच्यं तथा च ब्राह्मणो यजेतेत्येवमादि श्रुतीनामप्रामाण्यापत्तिः परमार्थतोऽकर्त्तुरभोक्तुश्चात्मनः प्रवृत्त्यनुपपत्तेः शास्त्रदेशितफलस्यानुष्ठातर्य्येव सम्भवेनात्मनोऽकर्त्तृत्वात्। सर्व्वोहि लोकः स्वात्मनः फलमुद्दिश्यैव प्रवर्त्तते इतरथाऽतिप्रसङ्गात् मुक्तस्यापि प्रवृत्त्यापत्तेश्च। शास्त्राप्रामाण्ये च शास्त्रमात्रवेद्यस्य ब्रह्मणः कुतस्तरां निर्द्धर्म्मकत्वसिद्धिः। तथाच वेदप्रामाण्यानुरोधात् प्रमाणादिव्यवहारसत्यत्वमित्याशङ्क्य किं तत्त्वज्ञानात् पूर्व्वमेवाप्रामाण्यमापाद्यते उत तदूर्द्ध्वम् आद्ये सर्व्वेषां प्रमाणानामविद्यावद्विषयत्वेऽपि संसारदशायां बाधाभावात् प्रामाण्यमस्त्येव देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः। लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादित्यभियुक्तोक्तेः। द्वितीये त्विष्टापत्तिरित्याह।

**न वर्णा वर्णाश्रमाचारधर्म्मा**
**न मे धारणाध्यानयोगादयोऽपि।**

अनात्माश्रयाहं ममाध्यासहानात्

तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ २ ॥

वर्णाः ब्राह्मणादयो जातिविशेषाः सकृदुपदेशवेद्याः पूर्व्वपूर्व्व ब्राह्मणोत्पन्नत्वादिव्यङ्ग्याः संस्कारव्यङ्ग्याश्च आश्रमा ब्रह्मचारि-गृहस्थ-वानप्रस्थ-भिक्षवस्तेषामाचाराः स्नानशौचादयः धर्म्माः वेदाध्ययनप्रजापालनादयः। मे मम वर्णाः ब्राह्मणादिजात्यभिमानास्तदाचारधर्म्मा वा परम्परया ज्ञानोपकारका अपि वस्तुतः न सन्तीत्यर्थः। धारणा बाह्यविषयपरिहारेण मनसः स्थैर्य्यं ध्यानं परात्मचिन्तनं योगश्चित्तवृत्तिनिरोधः आदि शब्देन श्रवणमननादयो गृह्यन्ते। धारणादयोऽपि ज्ञानसाराद्उपकारका अपि मम न वस्तुतः सन्तीत्यर्थः। साक्षात् परम्परया चोपयोगिनामपि तेषां ज्ञानोत्तरकालेऽसत्त्वे हेतुमाह अनात्मेत्यादि। अनात्मा आत्मविरोधिनी अविद्या आश्रयउपादानं येषां तेषामहङ्कारममकाराध्यासानां देहादितद्धर्म्मादिषु तादात्म्यसंसर्गाध्यासानां हानात् तत्त्वज्ञानेन विनाशनात्। तथा चाविद्यानाशेन तत्प्रयुक्तवर्णाश्रमाचारधर्म्मादि व्यवहारो नोपपद्यत इत्यर्थः यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र तु सर्व्वमात्मैवाभूत् तत् केन कं पश्येदित्यादिश्रुत्या संसारदशायां सर्व्वव्यवहारसत्त्वस्य मोक्षावस्थायां

तन्निषेधस्य च प्रतिपादनादिति भावः । अन्यत् व्याख्यातम् ॥ २ ॥

वर्णाश्रमादिव्यवहारस्य मिथ्याऽज्ञानमूलत्वेन मिथ्यात्वं द्रढ़यितुं सुषुप्तौ तत्तद्व्यवहाराभावमाह ।

न माता पिता वा न लोका न देवा
न वेदा न यज्ञा न तीर्थं ब्रुवन्ति ।
सुषुप्तौ निरस्तातिशून्यात्मकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ३ ॥

माता जननी । पिता जनकः। देवा इन्द्राद्या उपास्याः । लोकास्तदुपासनफलानि स्वर्गादीनि । वेदा अलौकिकहिताहितसाधनताबोधकानि ब्रह्मप्रतिपादकानि चापौरुषेय वाक्यानि । यज्ञाः स्वर्गादिसाधनभूता ज्योतिष्टोमादयः । तीर्थं यज्ञसाधनं कुरुक्षेत्रादिदेशः । वर्णाभिमानमूलानां मात्रादीनां वर्णाश्रमाचाराभिमानमूलानाञ्च वेदादीनां सुषुप्तावभावात् सुषुप्तौ न मातेत्यादिकं ब्रुवन्ति कथयन्ति न व्यवहरन्तीत्यर्थः । तथा च ममाध्यासं प्रति स्थूलदेहाध्यासस्य हेतुतया तदानीं तदभावे ममत्वविशिष्टस्य न व्यवहार इति भावः, अत्र पिता अपिता भवति माता अमाता लोका अलोका देवा अदेवा इत्युपक्रम्य तीर्णो हि तदा सर्व्वान् शोकान् हृदयस्य भवतीति श्रुतिरेव सुषुप्तौ सर्व्वा-

त्थैनाशं बोधयन्तो मानम्। सर्व्वाभावे शून्यता स्यादित्याशङ्का नेत्याह निरस्तेति। निरस्तं निवृत्तमतिशून्यात्मकत्वं शून्यमात्रस्वभावत्वं यस्मात्तस्य भाव स्तस्मात् सुषुप्तौ सर्व्वेषामविद्याप्रत्युपस्थापितानां नाशेऽपि नात्मशून्यता पुनरुत्थानानुपपत्तेरतो नातिशून्यवाद इत्यर्थः।

तथा च सर्व्वज्ञजगत्कारणीभूतसर्व्वशक्तिपूर्णानन्दबोधस्वरूपेन ब्रह्मणा सहैक्यादसंसार्य्येव जीव इति व्यवस्थापितम्॥ ३॥

त्रिभिः श्लोकैस्त्वंपदार्थो वादिविप्रतिपत्तिनिराकरण पूर्व्वं निरूपितः। इदानीतत्त्वमस्यादिवाक्यार्थज्ञानाय तत्पदार्थोऽपि निरूपणीयस्तत्र बह्वीषु वादिविप्रतिपत्तिषु सतीषु कथमौपनिषदपक्षनिर्द्धारणम्।

तथाहि सच्छब्दवाच्यं साम्यावस्थापन्नसत्वरजस्तमोरूप गुणत्रयस्वरूपं प्रधानमेव जगत्कारणं पृथिव्यादिकार्य्यस्य सुख दुःखमोहात्मकत्वदर्शनेन तथापरिणामयोग्यस्य गुणत्रयस्यैव कारणत्वौचित्यात् ब्रह्मणश्चापरिणामित्वेनैकस्वभावतया त्रिविध कार्य्यजनकत्वानुपपत्तेः सदेव सौम्येदमग्रआसीदिति श्रुत्वा प्रतिपादितस्य जगत्कारणस्य सदात्मनाऽवधारणेनाचेतनघटा द्युपादानताया अचेतनप्रधानस्यैव सम्भवेन च प्रधानस्यैव सच्छब्दवाच्यत्वौचित्याच्च। जीवस्य च चेतनतया न प्रधानेनैक्य मिति सांख्या मन्यन्ते।

पशुपतिरेव जगत्कारणं स च चेतनोऽपि जीवाद्भिन्न

उपास्यश्चेति न तयोरैक्यमिति पाशुपताः।

भगवान् वासुदेवएवेश्वरो जगत्कारणम्। तस्मात् सर्व्वं जीवाभिमानी सङ्कर्षणउत्पद्यते। तस्माच्च सर्व्वमनोऽभिमानी प्रद्युम्नः प्रद्युम्नाच्च सर्व्वाहङ्काराभिमानी अनिरुद्ध उत्पद्यते। तेन ब्रह्मणो वासुदेवस्य जीवादिरूपजगत्कारणत्वेन ततोऽत्यन्तभेदएवेति नाभेदस्तयोरिति पाञ्चरात्राः।

अन्यथान्यथा परिणममानोऽपि अनुच्छिन्न स्वभावः सर्व्वज्ञो जीवाद्भिन्नाभिन्नश्चेश्वरः।

भेदाभेदौ तु कालभेदेन स्तो यथा जरा।

आ मुक्तेर्भेदएव स्याज्जीवस्य च परस्य च॥

मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतइति।

उक्तव्यवस्थयैव भेदाभेदव्यवस्थापनात्। जगतश्च ब्रह्मपरिणामत्वादेव सत्यत्वं कारणसमसत्ताककार्य्याणामेव तात्त्विकत्वात्। तथाच जीवेन जगता च तस्य भेदाभेदयोः सत्त्वेन भेदमादाय यो विज्ञाने तिष्ठन्नित्याद्या अन्तर्यामिश्रुतयः अभेदमादाय च तत्त्वमसि श्वेतकेतो इदं सर्व्वं यदयमात्मेत्याद्याः प्रवृत्ताः। समुच्चिताभ्यां च ज्ञानकर्म्मभ्यां भेदस्य लिङ्गशरीरस्य च निवृत्तौ अभेदप्राप्तौ मोक्षइति त्रिदण्डिनः।

नास्ति सर्व्वज्ञत्वाद्युपेतं चेतनं ब्रह्म कर्म्मैव जगत्कारणं यतो वा इमानि भूतानि जायन्ते इत्यादीनि वाक्यानि तु

तद्विश्वासस्त्वित्युपासनाविधिशेषतया सर्व्वज्ञत्वाद्युपेतब्रह्मणि तात्पर्य्याभावात्, आम्नायस्य क्रियामात्रप्रतिपादकत्वादक्रियारूप सिद्धवस्तुनो वेदेन प्रतिपादयितुमशक्यत्वात्। तथा च वाचि धेन्वादिदृष्टिवत् जगत्कारणस्य परमाण्वादेः अदृष्टजननद्वारा जगत्प्रयोजकस्य जीवस्य वा सर्व्वज्ञत्वादिगुणदृष्ट्या उपास्यता श्रुत्या विहिता। तथाच यतोवेत्यादिश्रुतेः यतः परमाण्वदृष्टादेर्जीवाद्वा जगदुत्पत्त्यादिकं तत् सर्व्वज्ञत्वादिदृष्ट्योपासीतेत्यर्थः पर्य्यवस्यति कपूयचरणाः कपूययोनिमापद्येरन्नित्यादिश्रुत्यैव कर्म्मणोजगत्कारणत्वस्य प्रतिपादनादिति मीमांसकाः।

आद्यकार्य्यं सकर्त्तृकं (स्वोपादानादिविषयापरोक्षज्ञानेच्छाकृतिमज्जन्यं) कार्य्यत्वात्घटादिवदित्यनुमानात् ज्ञानादिमतश्च नित्यैकत्वयोर्लाघवर्मितिग्राहकसहकृतात् सर्व्वज्ञानादिमान्नित्य एक ईश्वरोऽस्ति। कर्म्मणश्चाचेतनतया जीवस्य चासामर्थ्येन तादृशप्रत्यक्षासम्भवेन तादृशज्ञानादिमत ईश्वराद्भेद एवेति तार्किकाः।

सर्व्वं जगत् क्षणिकमित्याद्याकारं रागद्वेषाद्यनुपरक्तं सर्व्वविषयकं यत् क्षणिकज्ञानं तत्प्रवाहरूपः परमेश्वरः। जीवात्मकज्ञानप्रवाहे तु न तादृशतेति तयोर्व्वैषम्याद्भेद एवेति सौगताः।

क्लेशकर्म्मविपाकाशयैरपरामृष्टो नित्यज्ञानरूपः सत्त्वगुणप्रतिफलिततया सर्व्वज्ञः संसारिविलक्षण ईश्वरः। क्लेश-

श्चाविद्यास्मितारागद्वेषाभिनिवेशाः। तत्रानित्याशुचिदुःखा-
द्यात्मसु नित्यशुचिसुखाद्यात्मिका ख्यातिरविद्या। दृग्दर्श-
नशक्त्योरेकात्मताऽस्मिता। रागोऽभिलषणीयवस्तुनि उत्-
कटेच्छा। विरतिकारणं चित्तवृत्तिविशेषो द्वेषः। आग्र-
हातिशयोऽभिनिवेशः। कर्म्मणी पापपुण्ये। विपाकः कर्म्म-
फलं जात्यायुर्भोगाः। आशयो विषयानुभवजन्यसंस्कारा-
परपर्य्याया वासना। तैरपरामृष्टोऽसंबद्धः। व्यवह्रिय-
माणो जीवस्तु कमलदलस्थसलिलवदसङ्गतया तैः शून्योऽपि
तदाश्रयबुद्ध्यविवेकेनाध्यस्यमानतया च तद्विशिष्टरूपेण व्यव-
ह्रियते। ईश्वरस्तु नैवमिति तयोर्भेद एवेति पातञ्जलाः।

अद्वितीयपरमानन्द एव ब्रह्म तच्च जीवाभिन्नं स्वरूपतः।
मायया च सर्व्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तञ्चेत्यौ-
पनिषदाः।

एवं वादिविप्रतिपत्तिभिः संदिग्धे तत्पदार्थे वेदान्त पक्ष
एव श्रेयानिति निर्णयायाह।

न सांख्यं न शैवं न तत् पाञ्चरात्रं
न जैनं न मीमांसकादेर्म्मतं वा।
विशिष्टानुभूत्या विशुद्धात्मकत्वात्
तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ४ ॥

सांख्यं सांख्यमतसिद्धं प्रधानं न तत् न तच्छब्दवाच्यमेवं सर्व्वत्र तत्तन्मतसिद्धं न तच्छब्दवाच्यमिति योजना । मीमांसकादेरित्यादिपदेनानुक्तानां पातञ्जलादीनां ग्रहणम् ।

तत्र न तावदचेतनं जगदुपादानं तदैक्षत बहुस्यां प्रजायेयेत्यादावीक्षणपूर्व्वकसृष्टिकर्त्तृत्वश्रवणेन कर्त्तुश्चेतनत्वावगमात् अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणवाणीत्यादौ जगत्कारणस्य जीवस्वरूपतानिर्द्देशेन चेतनाभिन्नत्व लाभात् यस्मिन् विज्ञाते सर्व्वमिदं विज्ञातं भवतीति चैकविज्ञानेन सर्व्वविज्ञानस्य प्रतिज्ञानात् अचेतनप्रधानविज्ञाने च तदप्रकृतिकानां पुरुषाणां विज्ञानासम्भवात् ऐतादात्म्यमिदं सर्व्वं स आत्मा तत्त्वमसि श्वेतकेतो इति चेतनशिष्यश्वेतकेतुना सह जगत्कारणस्य तच्छब्दवाच्यस्याभेदप्रतिपादनात् तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादौ जगत्कारणतया आत्मनो निर्द्देशाच्च । अचेतनस्य जगत्कारणत्वे विचित्ररचनानुपपत्तेः प्रधानमहदादेरचेतनत्वेन सृष्ट्यादौ प्रवृत्त्यनुपपत्तेश्च ।

पाशुपतपाञ्चरात्रमतसिद्धं न तच्छब्दवाच्यं श्रुतिस्मृतिविरुद्धत्वात् ।

मीमांसकादिमतसिद्धमदृष्टपरमाण्वादिकं न जगत्कारणं तेषामचेतनत्वेन प्रवृत्त्यनुपपत्तेः जगतो विचित्ररचनावत्त्वेन प्रासादादिवद्बुद्धिपूर्व्वकार्य्यत्वानुमानाच्च । गौणमुख्यप्रयोजनशून्यानां वेदभागानामप्रामाण्यभिया विधिशेषत्वकल्पनेऽपि

स्वप्रतिपाद्यजीवब्रह्माभेदज्ञानद्वारा परमानन्दपुरुषार्थवत्त्वेन वेदान्तानां स्वार्थे स्वतःप्रामाण्याच्च विधिशेषत्वकल्पना शास्त्रयोनित्वादिति तत्तु समन्वयादिति च न्यायेन सिद्धस्यापि ब्रह्मणो वेदान्तवाक्येनैव प्रमितत्वप्रतिपादनात् तन्त्वौपनिषदं पुरुषमिति श्रुत्या ब्रह्मणो वेदान्तमात्रप्रमाणगम्यत्वावगमाच्च ।

तार्किकादिमतसिद्धमपि न जगत्कारणं तत्त्वमसि अहं ब्रह्मास्मीति श्रुतिभिर्जीवजगत्कारणब्रह्मणोरभेदप्रतिपादनात् । ततो भिन्नेश्वरकल्पनं श्रुतिविरुद्धत्वात् नादेयम् ।

एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चनेत्यादिश्रुति विरुद्धतया भिन्न भिन्नत्वमतमप्ययुक्तम् ।

आकाशवत् सर्व्वगतश्च नित्यइत्यादिश्रुतिविरुद्धत्वात् क्षणिकत्वपक्षोऽप्ययुक्तः ।

अत्र च सर्व्वेषां मतस्यायुक्तत्वे हेतुमाह विशुद्धात्मकत्वादिति निर्विकल्पकाद्वैतचैतन्यरूपतयात्मनः श्रुतिषु श्रुतत्वात् तत्तन्मतसिद्धस्याविशुद्धात्मकत्वादित्यर्थः । विशुद्धात्मकत्वे हेतुमाह विशिष्टेति विशिष्टा सविकल्पकानुभूतिभ्यो विलक्षणा या तत्त्वमस्यादिवाक्यजन्याखण्डानुभूतिस्तयेत्यर्थः । अहंप्रत्ययालम्बनमेव वस्तुतस्तत्पदार्थौ न तु तयोर्भेद इतितत्त्वम् । एवञ्च सर्व्वव्यापकस्य ब्रह्मणः सर्व्वकारणत्वेऽपि तत्तत्कार्य्यसहितकारणत्वस्य मिथ्यात्वेन तन्मूलीभूताविद्यानिवृत्तौ अद्वितीयत्वसम्पत्त्या परमानन्दब्रह्मणा सह जीवस्याप्यभेद इति सिद्धम् ॥ ४ ॥

ननु स एषोऽणिमेति अणोरणीयानित्यादिश्रुतिषु ब्रह्मणो ऽणुत्वश्रवणात् कथं सर्वकारणताप्रयोजकसर्वव्यापकतेत्याशङ्क्य आकाशवत् सर्वगतश्च नित्यइत्यादिश्रुत्या तस्य सर्व व्यापकत्वोक्त्या दुर्लक्ष्यत्वरूपाणुत्वस्य तादृशश्रुत्या बोधनादिति पूर्वोक्तमपरिच्छिन्नत्वमेव दृढ़यन्नाह ।

न चोर्द्ध्वं न चाधो न चान्तर्न बाह्यं
न मध्यं न तिर्य्यक् न पूर्व्वा परा वा ।
वियद्व्यापकत्वादखण्डैकरूप
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ५ ॥

परिच्छिन्नस्यैवोर्द्ध्वादिव्यवस्था नापरिच्छिन्नस्य । वियत इव वियतो वा व्यापकस्य तस्याखण्डरूपतैव ब्रह्मापरमनवरमनन्तरमबाह्यमितिश्रुत्या तस्य सर्वधर्म्मनिषेधात् । सकलदेहव्यापि चैतन्योपलब्ध्या जीवस्य महत्त्वे सत्यपि बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रो ह्यवरोऽपि दृष्ट इति श्रुत्या बुद्धिगुणेनाणुत्वारोपेणाराग्रमात्रत्वं यथा बोधितं तथा आकाशवद्व्यापकस्यापि उपाधिनैवाणुत्वादिकल्पन मिति भावः । ५ ।

ननु ब्रह्मणो जगदुपादानत्वे उपादानोपादेययोरभेदेन दुःखात्मकजगदभेदाद्ब्रह्मणो दुःखादिरूपत्वापत्तिस्तथा

चतद्रूपावाप्तिरूपे मोक्षे जीवस्य प्रवृत्तिर्न स्यादित्याशङ्क्य स्वतः परमानन्दस्वरूपस्य निःसङ्गस्य ब्रह्मणः निखिलजगदध्यासाधिष्ठानत्वेन कारणत्वेऽपि अध्यस्तधर्म्माणामधिष्ठाने गन्धमात्रेणाप्यभावान्न परमानन्दताहानिरित्याह ।

न शुक्लं न रक्तं न पीतं न कृष्णं
न कुब्जं न पीनं न ह्रस्वं न दीर्घम् ।
अरूपं तथा ज्योतिराकारकत्वा-
त्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ६ ॥

शुक्लादीन्येव प्रसिद्धानि अन्यानि तु मिश्रितानीति तन्निषेधेनैव सर्वरूपनिषेधः अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदित्यादिश्रुतेः । कुब्जमणुपरिमाणं पीणं महत्परिमाणं न ह्रस्वमित्यत्र न छन्दोभङ्गः प्रह्वे वेतिपक्षे गुरुत्वाभावात् । तेनाणुमहद्दीर्घह्रस्व परिमाणनिषेधेनेतरपरिमाणासद्भावेन द्रव्यत्वस्यैव निषेधः अस्थूलमनण्वह्रस्वमदीर्घमित्यादिश्रुतेः । रूप्यते ज्ञायतेइति रूपं प्रमेयमरूपमप्रमेयं सर्वप्रमाणाविषयः वेदतदुपजीविसंस्कृत मनोवृत्त्यादि विषयत्वेऽपि चिदाभासरूपफलविषयतानिरासात् तादृशवृत्तीनामावरणनाशोपयोगित्वेऽपि स्वयं प्रकाशमानतया स्वप्रकाश

प्रदीपवदितरानपेक्षणादित्याह ज्योतिराकारकत्वात् स्वप्रकाश त्वादित्यर्थः ॥ ६ ॥

ननु जीवस्य परमार्थतो ब्रह्माभिन्नतया शास्त्रोपदेशानर्थ क्यमित्याशङ्क्य परमार्थतः फलाभावादुपदेशानर्थक्यमिष्टमे- वेत्याह ।

न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपञ्चः ।
स्वरूपावबोधो विकल्पासहिष्णु
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥ ७ ॥

शास्ता उपदेष्टा शास्त्रमुपदेशकरणं शिष्य उपदेशकर्म्म शिक्षा उपदेशक्रिया त्वं श्रोता अहं वक्ता अयं सर्वप्रमाण सन्निधापितः प्रपञ्चो देहेन्द्रियादिरनर्थो वस्तुतो नास्तीत्यर्थः। स्वरूपस्य परमानन्दात्मनोऽवबोधः साक्षात्स्फुरणं विकल्पासहि ष्णुः सर्व्वद्वैतोपमर्द्देन विकल्पनिरसनात् । श्रुतिश्च न निरो- धो नचोत्पत्तिर्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति सृष्टिप्रलयबन्धमोक्षाद्यिव्यवस्थानां पर- मार्थतोऽसत्यतामेव दर्शयति । ब्रह्म वा इदमग्र आसीदिति तदात्मानमेवावेत् अहं ब्रह्मास्मीति तस्मात्तत् सर्व्वमभवदि-

णुः सर्व्वद्वैतोपमर्द्देन विकल्पनिरसनात् । श्रुतिश्च न निरोधो नचोत्पत्ति र्न बन्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति सृष्टि प्रलय बन्धमोक्षादिव्यवस्थानां परमार्थतोऽसत्यतामेव दर्शयति । ब्रह्म वा इदमग्र आसीदिति तदात्मानमेवावेत् अहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवदित्याद्याः श्रुतयः पूर्व्वमपि ब्रह्मात्मनैव सतो जीवस्य ब्रह्मभावं दर्शयन्त्यः सर्व्वद्वैतजालविकल्पं निवारयन्ति ॥ ७ ॥

ननु स्वप्रकाशचैतन्यस्वरूपस्यात्मनः सर्व्वदा भासमानत्वेन जाग्रदाद्यवस्थाभेदो नोपपद्यते इत्याशङ्क्य जाग्रदाद्यवस्थात्रयाणां व्यवहारिकलक्षणभेदेन व्यवस्थेतरभेदवदुपपद्यते परमार्थतस्तु न कापि व्यवस्थेत्याह ।

न जाग्रन्न मे स्वप्नको वा सुषुप्ति
र्न विश्वो न वा तैजसः प्राज्ञको वा ।
अविद्यात्मकत्वात्त्रयाणां तुरीय
स्तदेकोऽवशिष्टः शिवः केवलोऽहम् ॥८॥

वेदान्तिमते सामान्यतः द्विविधएव पदार्थः दृगदृश्यश्च-तत्रैव सर्व्वपदार्थान्तर्भावात् । तत्र दृक्पदार्थ आत्मा । स च सर्व्वदैकरूपोऽप्यौपाधिकभेदात् त्रिविधः ईश्वरः जीवः साक्षी चेति । तत्र कारणीभूताज्ञानोपाधिरीश्वरः । अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानेप्रतिबिम्बितो जीवः । जीवेश्वरानु-

गतसर्व्वानुसंधात्ट चैतन्यं साची। तत्रेश्वरोऽपि त्रिविधः स्वोपाधिभूताविद्यावृत्तिसत्त्वादिगुणत्रयभेदेन विष्णुब्रह्म-रुद्रभेदात्। तत्र कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पाल-यिता। तथा रजउपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा। तथापि स्थूलभूतस्रष्टृत्वेन क्वचिद्ब्रह्मेत्युपचय्यते। तथा तमउपहितो रुद्रः संहर्त्ता। एवञ्चैकस्यैव तस्य चतुर्भुजचतुर्मुखाद्याः पुमाकाराः श्रीभार-तीभवान्याद्याश्च स्त्र्याकारा मत्स्यकूर्म्मादयोऽप्यवतारा लीलयैवाविर्भवन्ति। तथा जीवोऽपि त्रिविधः स्वोपाधिजा-ग्रदाद्यवस्थात्रयभेदेन विश्वतैजसप्राज्ञभेदात्। तत्राविद्या-न्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदभिमानी विश्वः। सएव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभि-मानीतैजसः। अयमेव शरीरद्वयान्तःकरणोपाधिरहितोऽ-न्तःकरणसंस्कारावच्छिन्नोऽविद्यामात्रोपहितः सुषुप्तावस्था-भिमानी प्राज्ञः। साची तु सर्व्वानुसन्धाता सर्व्वानुगतस्तु रीयाख्य एकविधएव। अविद्यातत्कर्म्मात्मकप्रपञ्चो दृश्य-पदार्थः तस्यापरमार्थिकत्वेऽपि व्यवहारिकत्वाभ्युपगमान्न स्वप्नादिवद्तात्विकत्वम्। दृश्योऽपि त्रिविधः अव्याकृतामू-र्त्तामूर्त्तभेदात्। तत्र चिदाभाससहिताऽविद्या मूर्त्तामूर्त्तप्रपञ्च स्थूलवीजशक्तिरनादिरव्याकृतमित्युच्यते। इयञ्चाव्याकृताख्या विद्येश्वरोपाधिः। साच स्वयं जड़ाऽप्यजड़ेन चिदाभासेनो-ज्ज्वलिता पूर्व्वपर्व्व संस्कारजीवकर्म्मभ्यां प्रयुक्ता सती शब्द-

स्पर्शरूपरसगन्धाश्रयाण्याकाशवायुतेजोजलपृथिव्यात्मकानि पञ्च सूक्ष्ममहाभूतानि जनयति। तत्र पूर्व्वपूर्व्वभूतभावापन्ना याएवाविद्याया उत्तरोत्तरभूतं प्रति कारणत्वात् पूर्व्वपूर्व्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशाद्भूतानामेकैकवृद्धीभूतगुणशालित्वं तथा चाकाशस्य शब्दो गुणः वायोः शब्दस्पर्शौ तेजसः शब्दस्पर्शरूपाणि जलस्य तानि रसश्च पृथिव्यास्तानि गन्धश्चेति। आकाशस्यैव दिग्व्यवहारजनकत्वेन दिशोन पृथक्पदार्थता। कालस्य चिज्जडसम्बन्धतदाधाराविद्यात्मकतया न पार्थक्यम्। तानि च सूक्ष्माणि पञ्चभूतानि अपञ्चीकृताख्यानि कारणभेदाच्च सत्वरजस्तमोगुणात्मकानि सत्त्वरजोंश प्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यंचित्ररूपमिव मिलित्वा जनयन्ति। तच्च द्रव्यं ज्ञानशक्तिप्राधान्येऽन्तःकरणं तदपि द्विविधं मनोबुद्धिभेदात्। चतुर्व्विधं मनोबुद्ध्यहङ्कारचित्तभेदादित्यन्ये। तदेव क्रियाशक्ति प्राधान्ये प्राणः स च पञ्चधा प्राणादिभेदात्। एवमेकैकभूतेभ्योज्ञानक्रियाशक्तिभेदात् प्रत्येकमिन्द्रियद्वयं जायते। यथाकाशात् श्रोत्रवाचौ वायोस्त्वक्पाणी तेजसश्चक्षुःपादौ अद्भ्यो रसनापायू पृथिव्या घ्राणोपस्थौ चोत्पद्येते। तत्र शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षुःरसनाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्म्मेन्द्रियाणि। एतच्च सर्व्वं मिलित्वा सप्तदशकं लिङ्गशरीरम्। तच्च ज्ञान-

शक्तिप्राधान्येन समष्टौ हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन समष्टौ सूत्रमिति चोच्यते। अयं मूर्त्तपदार्थः कार्य्यत्वात्। समष्टिव्यष्टिजीवोपाधिसूक्ष्मभूतानि तु भोगायतनं शरीरं भोग्यविषयञ्चान्तरेण भोगं जनयितुमसमर्थानीति जीवकर्म्म प्रयुक्तानि तानि स्थौल्यार्थं पञ्चीकृतानि भवन्ति। यथा सर्व्वाणि भूतानि स्वस्वार्द्धांशे स्वेतरभूतानां चतुर्णामष्टमांशैश्चतुर्भिर्योजनात् सर्व्वाण्येव पञ्चात्मकानि। स्वस्वांशाधिक्याच्चाकाशादिव्यवहारः।

तानि च पञ्चीकृतानि महाभूतानि मूर्त्ताख्यानि मिलित्वैकं कार्य्यमिन्द्रियाणामधिष्ठानं भोगायतनं जनयन्ति। तदेव स्थूलशरीरमित्युच्यते। तत्र सत्वप्रधानं दैवं शरीरं रजःप्रधानं मानवं तमःप्रधानं तिर्य्यगादिस्थावरान्तानाम्। सर्व्वेषां देहानां पाञ्चभौतिकत्वेऽपि चित्रे रूपाणामिव भूताना क्वचिन्न्यूनातिरेको न विरुद्ध्यते। एवं विषया अपि चतुर्द्दश भुवनाख्या घटादयश्च सत्त्वरजस्तमोगतारतम्येन तेभ्यएव भूतेभ्यो जायन्ते। एतच्च सर्व्वं ब्रह्माण्डं विराडिति चोच्यते। सर्व्वं च सृष्टिप्रलयादिकं स्वप्नसृष्टिप्रलयवदवास्तवमपि अनादिवासनादार्ढ्यात् व्यवहारक्षममिति मायिकत्वेऽपि न तुच्छत्वप्रसङ्गः।

एवं स्थिते जाग्रदादिव्यवस्थोच्यते। इन्द्रियवृत्तिकालिकोऽर्थोपालम्भो जाग्रत्। तत्र च भोग्यं प्रत्यक्षादिप्रमाणजातेन व्यवह्रियमाणत्वाद्व्यवहारिकं विश्वाख्येन जीवो-

नोपभुज्यते। जीवश्च तदा देहादिषु विशनाद्व्यापनाद्वा विश्व इत्युच्यते विश् प्रवेशने विश्ऌ व्याप्तौ इत्यर्थानुगमात्। एवं जाग्रद्भोगजनककर्म्मक्षये स्वभोगजनककर्म्मोदये च सति निद्राख्यया तामस्या वृत्त्या स्थूलदेहाभिमाने दूरीकृते सर्व्वेष्विन्द्रियेषु स्वस्वाधिष्ठातृदेवतानुग्रहाभावान्निर्व्यापारतया लीनेषु विश्वोऽपि लीनइत्युच्यते सैव स्वप्नावस्था। तथा चान्तःकरणवासनानिमित्त इन्द्रियवृत्त्यभावकालिकोऽर्थोपालम्भः स्वप्नः। शुक्तौ रजताऽभावेऽपि तदधिष्ठानाविद्यैव रजताकारेण यथा परिणमते तयैव च ज्ञायते एवं स्वप्नेऽप्यविद्यैव जतुरगाद्याकारेण परिणमते तयैव च ज्ञायते अथ रथान् रथयोगान् पथःसृजते इतिश्रुतौ तथासृष्टिनिर्द्देशात्। एवं जाग्रत्स्वप्नभोगद्वयेन श्रान्तस्य जीवस्य तदुभयकारणकर्म्मक्षयेज्ञानवृत्त्यवच्छिन्नस्य सवासनस्यान्तःकरणस्य कारणीभूताविद्यात्मनावस्थाने सति विश्रामस्थानं सुषुप्तिः। तत्र च जाग्रत्स्वप्नभोग्यज्ञानाभावेऽपि साक्षिचैतन्याकारं सुखाकारमवस्थाकारञ्चाविद्या वृत्तित्रयमभ्युपेयते। अहङ्काराऽभावाच्च नैका विशिष्टा वृत्तिः। अतएव तत्र सुखमहमस्वाप्सं न किञ्चिदवेदिषमिति सुप्तोत्थितस्य परामर्शः पूर्व्वमननुभवे स्मरणानुपपत्तेः। जाग्रदाद्यवस्थाना मविद्योपादानतया तदभिमानिनां विश्वादीनाञ्च व्यवहारिकत्वेन कल्पिततया सर्व्वकल्पनातीतंतुरीयं शुद्धचैतन्यमेवाहं प्रत्ययालम्बनमिति समुदितार्थः॥ ८॥

ननु जाग्रदाद्यवस्थात्रयस्य तदभिमानिनाञ्च मिथ्यात्वे तत्साक्षिणोऽप्यविशेषान्मिथ्यात्वं स्यादित्याशङ्क्य विशेषादेव सत्यत्वमित्याह।

अपि व्यापकत्वाद् हितत्वप्रयोगात्
स्वतःसिद्धभावादनन्याश्रयत्वात्।
जगत्तुच्छमेतत् समस्तं तदन्यत्
तदेकोऽवशिष्टः शिवः केवलोऽहम्॥९॥

96259

नहि द्रष्टेर्द्रष्टारं पश्येरिति साक्षिणं प्रकृत्य अतोऽन्यदार्त्तमिति श्रुतेः साक्षिणोऽन्यत् सर्वं जगत् मिथ्या न तु साक्षी तस्य सर्वबाधावधित्वेन भ्रमाधिष्ठानत्वेन च सत्यत्वात्। अन्यथा ग्राहकाभावेन तद्बाधग्रहणासम्भवइत्यनुक्तसमुच्चयोऽपिशब्दार्थः। अथ यदल्पं तदमर्त्यमिति श्रुतेः परिच्छिन्नत्वमिथ्यात्वयोः समव्याप्तत्वेन साक्षिणः परिच्छिन्नत्वनिवृत्त्या मिथ्यात्वनिवृत्तिरित्याह व्यापकत्वादिति अपरिच्छिन्नत्वादित्यर्थः आकाशादीनान्तु देशकालादिपरिच्छिन्नत्वेऽपि आपेक्षिकमहत्त्वेन व्यापकत्वोपचार इति भावः। ननु सर्वव्यापकत्वेन नित्यत्वाद्भावरूपत्वाच्चात्मा दुःखनिवृत्तिरूपो नभवितुमर्हति नापि सुखरूपः सुखस्यानित्यत्वेन नित्यात्मस्वरूपतानुपपत्तेः तथा च दुःखनिवृत्तेः सुखप्राप्तेर्वा परमपुरुषार्थतयात्मनश्च तद्भिन्नतयाऽपुरुषार्थतापत्तिरित्याशङ्क्याह हितत्वप्रयो-

गादिति द्वितत्वं पुरुषार्थत्वं तेनैव रूपेण प्रयोगादुपदेशात् तदेतत् प्रेयःपुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्व्वस्मादिति यो वै भूमा तत् सुखमिति विज्ञानमानन्दं ब्रह्मेत्यादिभिः श्रुतिभिः सुखस्य परमात्मरूपत्वेनोपदेशादित्यर्थः। तस्य च नित्यत्वेऽपि लोके धर्म्मजन्यान्तःकरणवृत्तिव्यङ्ग्यतयोत्पत्तिविनाशोपचारः। अज्ञानावृतस्य च तस्याप्राप्तस्येव ज्ञानमात्राद्विद्यानिवृत्त्या प्राप्तिरिव भवतीति तदुद्देशेन मुमुक्षुप्रवृत्त्युपपत्तिरिति भावः ननु मोक्षे सुखं ज्ञायते न वा नाद्यस्तदानीं देहेन्द्रियाद्यभावेन वाञ्जकाभावात् व्यञ्जकाभावेऽपि ज्ञानाभ्युपगमे संसारदशायामपि सर्व्वदा तज्ज्ञानप्रसङ्गात्। न द्वितीयः अपुरुषार्थत्वापत्तेः ज्ञायमानसुखस्यैव पुरुषार्थत्वादित्याशङ्क्याह स्वतःसिद्धभावादिति सुखस्यैवात्मरूपतया तस्य स्वप्रकाशज्ञानरूपत्वान्न व्यञ्जकापेक्षा. संसारदशायान्तु ब्रह्मानन्दस्याविद्ययावरणान्न स्वतःप्रकाशः मोक्षे त्वविद्यानिवृत्त्यावरणाभावेन न व्यञ्जकापेक्षेति भावः। ननु सुखस्य स्वप्रकाश ज्ञान रूपत्वेऽपि नात्मरूपता ज्ञानस्य धात्वर्थरूपतया क्रियात्वेन साश्रयत्वात् जानामीत्येव प्रतीतेः ज्ञानमस्मीत्यप्रतीतेश्चेति कथमद्वैतवाद इत्याशङ्क्याह अनन्याश्रयत्वादिति। यत् साक्षादपरोक्षाद्ब्रह्मेति सत्यं ज्ञानमनन्तं ब्रह्मेति विज्ञानमानन्दं ब्रह्मेति श्रुतिभ्योब्रह्मणः स्वप्रकाशनित्यज्ञानानन्दस्वरूपतावगमेनान्तःकरणतादात्म्याध्यासेन च तद्धर्म्मे ज्ञानाध्यासाज्जानामीति तदाश्रयत्वप्रतीतिः धात्वर्थत्वञ्चोत्पत्ति-

विनाशवत्त्वं तस्मान्तःकरणवृत्तेरेव ज्ञप्तिरूपसुखात्मकज्ञानस्य सर्व्वाधिष्ठानत्वेनान्याश्रयत्वाभावान्न द्वैतापत्तिरिति भावः तेन ज्ञप्तिसुखात्मक आत्मैवसत्यस्तद्भिन्नं सर्व्वं तुच्छमित्याह जगदित्यादि ॥ ९ ॥

ननु सर्व्वस्य जगतस्तुच्छत्वे तत्प्रतिषेधेनात्मतत्त्वप्रतोतिर्नस्यात् न हि शशविषाणं क्वचिदपि निषिध्यते तस्य क्वचिदप्रतीतेः क्वचित्प्रमितस्यैव क्वचिन्निषेध इति नियमात्। तथा च निषेधानुपपत्त्यैव जगतस्तुच्छत्वं न स्यादित्याशङ्का नेत्याह ।

न चैकं तदन्यद्द्वितीयं कुतः स्या-
न्न वा केवलत्वं नचाऽकेवलत्वम् ।
न शून्यं न चाशून्यमद्वैतकत्वात्
कथं सर्व्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥

एकत्वसंख्यायोगि एकं तदपेक्षाबुद्धिजन्यद्वित्वसंख्यायोगि द्वितीयं तन्नैकाभावेऽपि द्वितीयं कुतःस्यात्। द्वितीयपदञ्च तृतीयादीनामप्युपलक्षणम्। ननु एकमेवाद्वितीयमिति श्रुत्यात्मन एकत्वमेव प्रतिपाद्यते नेत्याह न केवलत्वमिति केवलत्वमेकत्वं तस्याविद्यिकत्वात् ब्रह्मणोऽपि वास्तवं नैकत्वमिति भावः। यद्यात्मन एकत्वं श्रुतिप्रतिपादितं न स्यात्तर्हि प्रत्यक्षादिसिद्धमनेकत्वमेव स्यादिति नेत्याह न

वाऽकेवलत्वमिति अकेवलत्वमनेकत्वमपि नेह नानास्ति किञ्चनेति अथात आदेशो नेति नेति च श्रुत्या निषिध्यते इत्यर्थः। तर्हि केवलत्वाकेवलत्वप्रतिषेधात्शून्यमेव स्यात् नेत्याह न शून्यमिति असन्नेव स भवति असद् ब्रह्मेति चेद्वेदेति अस्ति ब्रह्मेति चेद्वेद् सन्तमेनं ततो विदुरिति सदेव सौम्येदमग्र आसीदित्युपक्रम्य ऐतादात्म्यमिदं सर्व्वं तत् सत्यं स आत्मेत्यादिश्रुतिभिरात्मनः सत्यत्वप्रतिपादनात् सर्व्वभ्रमाधिष्ठानत्वेन सर्व्वबाधावधित्वेन च तस्य सत्यत्वं विना सर्व्वासत्यत्वप्रसङ्ग इति भावः। तर्हि सत्यत्वज्ञानत्वादिधर्म्मविशिष्टोऽपि स्यात् नेत्याह न चाशून्यमिति एकमेवाद्वितीयमिति पदद्वयेन सर्व्वप्रतिषेधेऽप्येवकारेण धर्म्मधर्म्मिभावादिभेदप्रतिषेधात्। सर्व्वत्र हेतुः अद्वैतकत्वादिति। द्विधेतं द्वीतं तस्य भावो द्वैतं न विद्यते द्वैतं द्विधाभावो यत्र तदद्वैतकमित्यक्षरार्थः। तथा चाभावबुद्धौ प्रतियोगिज्ञानस्यैव कारणत्वं नतु प्रतियोगिसत्यत्वस्यापि। तथा च सर्व्वद्वैतस्याविद्यिकप्रत्यक्षगोचरत्वात्तन्निषेधोपपत्तिरिति भावः। तर्हि एतादृश आत्मेत्युल्लिङ्गितेन कथ्यतामिति चेत् वर्णयितुमशक्यत्वादेव न कथ्यते इत्याह। कथं ब्रवीमीति कथमित्याक्षेपे अद्वैतत्वेनैव तस्य वागविषयत्वात्। अवचनेनैव प्रोवाचेति यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति न विज्ञातेर्विज्ञातारं विजानीयादित्यादिश्रुतिभिस्तथा प्रतिपादनादित्यर्थः। वागविषयत्वे वेदान्तानां कथं तत्र प्रामा-

ण्यमिति चेत् अविषयेऽप्यात्मनि तदाकारवृत्तिमात्रेण तद-विद्या निवर्त्तकत्वात् प्रामाण्यमित्याह सर्व्ववेदान्तसिद्धमिति। तथाच श्रुतयः यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानतामिति यन्मनसा न मनुते येनाहुर्म्मनसो मतम्। तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते इत्यादयः अविषयत्वमात्मनो दर्शयन्ति। अतएव फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निराकृतम्। ब्रह्म-ण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षितेति अविद्यानिवृत्तये वृत्तिविषयतैवात्मनो न तु चिदाभास रूपान्तःकरणप्रतिविम्ब चैतन्यविषयतापीत्युक्तम्। अन्यत्र प्रदीपस्यावभासकत्वे-ऽपि सूर्य्यकिरणे प्रतिहतेरिवब्रह्मज्योतिषा तस्य प्रतिहति स्वीकारात् ब्रह्मज्योतिस्तु आवरणाभावेन स्वतएव प्रकाशते इति तस्य स्वप्रकाशतैव। तदेवं वेदान्तवाक्यजन्याखण्डाका-रवृत्त्याऽविद्यानिवृत्तौ तत्कल्पितसकलानर्थनिवृत्त्या आत्मा स्वतःपरमानन्दरूपतया प्रकाशमानः कृतकृत्योभवतीति सिद्धम् ॥ १० ॥

भूयोभूयःप्रार्थयेऽहं प्रणत्या
योग्रन्थेऽस्मिन् दोषलेशोममास्ति।
चन्तव्योऽसौ साधुभिर्मत्कृपातः
चित्तं देयं दोषसंशोधनाय ॥

इति श्रीकालिदाससार्व्वभौमभट्टाचार्य्यात्मज श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलितो वेदान्तसिद्धान्तविन्दुसारः समाप्तः।

शाकेऽग्निनववाहेन्दुमाने पूर्त्तिमगादयम्।
सिद्धान्तविन्दुसारः श्रीतारानाथसमाहृतः॥
१७८३ शाके।

---

## ब्रह्मस्तोत्रव्याख्या।

सर्व्वाधारोऽप्यविद्यायानिवृत्तौ सर्व्वं शून्यताम्।
बिभर्त्ति यत्परंब्रह्म तन्निर्द्दोषमुपास्महे॥
वात्स्यवंशजनिश्रीमत् तारानाथद्विजन्मना।
ब्रह्मस्तोत्रस्य तात्पर्य्यव्याख्या स्वल्पा वितन्यते॥

सत्यं ज्ञानमानन्दं ब्रह्मेतिश्रुतेर्ब्रह्मणएव सत्यत्वं ततोऽन्यस्य तु मिथ्यात्वम् अतोऽन्यदार्त्तमितिश्रुतेः। जगतां मिथ्यात्वेऽपि शुक्तौ रजतस्येव अविद्यया स्वाधिष्ठाने ब्रह्मणि तादात्म्येन तद्धर्म्माणाञ्च संसर्गतोऽध्यासः। जवालौहित्यादेः स्फटिकादाविव अध्यस्तानां तद्धर्म्माणाञ्चस्वाधिष्ठाने लेशतोऽपि न सम्बन्धः। तत् सम्बन्धाभावेन च ब्रह्मणो निर्द्दोषत्वं निरञ्जनं परमं साम्यमुपैतीत्यादिश्रुतेः। जगतामध्यस्तत्वे-

ऽपि आ ब्रह्मतत्त्वबोधात् व्यवहारिकसत्त्वं बाधात् पूर्व्वं शुक्तिरजतादीनां प्रातीतिकसत्त्वमिवाभ्युपेयते यत्र हि द्वैतमिव भवति तदितरइतरं पश्यतीत्यादिश्रुत्या सर्व्वद्वैतानां व्यवहारिकत्वप्रतिपादनात्। सति चाधिष्ठानसाक्षात्कारे शुक्तौ रजतादेरिवसर्व्वजगतां बाधः तरति शोकमात्मविदिति ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतेः। एवं च परमार्थावस्थायां सर्व्वेषां बाधेन ब्रह्मस्वरूपस्यैवावस्थितिः नेह नानास्ति किञ्चनेति यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येदित्यादिश्रुत्या सर्व्वव्यवहारिकविषयाभावप्रतिपादनात्। सर्गश्रुतीनाञ्च स्वोपादान एव ब्रह्मणि वियदादेरसत्त्वप्रतिपादनद्वाराऽत्यन्ततुच्छत्वप्रतिपादनपरत्वम्। अत्यन्ततुच्छत्वेऽपि अनाद्यविद्यावासनासनादात्म्यात् व्यवहारिकत्वमात्रं कल्प्यते। इत्येवंवेदान्तसिद्धान्ते स्थिते सर्व्वव्यवहारिकपदार्थाभावे प्रतिपादयितव्ये आदौ सपरिकरशब्द सहितवियदभावं दर्शयित्वा स्तौति।

स्थानं न मानं न च नादविन्दु
रूपं न रेखा न च धातुवर्णः।
द्रष्टा न दृश्यं श्रवणंप्रयोग-
स्तस्मै नमो ब्रह्मनिरञ्जनाय॥ १॥

यतः सर्व्वश्रुतादेर्व्विस्तयतस्तद्धर्म्माणाञ्चाभावस्ततो निरञ्जनं निर्द्दोषं तस्मै ब्रह्मणे नमइत्यन्वयः। कुमारश्रमणादि-

वत् ब्रह्मशब्दस्य प्राङ् निपातः। ध्वन्यात्मकवाचकरूपशब्द
योराधारो वियत् तस्यैवाभावे तद्धर्माणां सुतरामभावइत्याह
स्थानमित्यादि तिष्ठत्यस्मिन्निति स्थानमाधारउपस्थितत्वात्
शब्दाधार एव वियत् निषिध्यते। स्थानपदञ्च वर्णोत्पत्ति-
स्थानपरमपि तच्च, अष्टौ स्थानानि वर्णानामुरः कण्ठः
शिरस्तथा। जिह्वामूलञ्च दन्ताश्च नासिकौष्ठौ च तालु चेति,
शिक्षोक्तदुक्ताष्टविधम् तथाच शब्दाधारस्य वाचकशब्दा-
भिव्यञ्जकवर्णोत्पत्तिस्थानानाञ्चाभावे कुतःशब्दसत्त्वमिति
भावः। सीयतेऽर्थोऽनेनेति मानं शाब्दबोधोपयोगि साका-
ङ्क्षादिवाक्यं तस्य च तत्तदानुपूर्वीविशिष्टवर्णाभिव्यञ्जकस्फो
टरूपता तत्तदानुपूर्वीविशिष्टवर्णात्मकता वेत्यन्यदेतत्।
तथा नादस्य स्फोटाभिव्यक्तिहेतुभूतस्य ध्वन्यात्मकस्य वा
विन्दुर्लेशोऽपि नास्तीत्यर्थः। वाक्यस्य तिङन्तादिघटिततया
तस्यैवाभावे न वाक्यसत्त्वमित्यभिप्रेत्याह रूपमिति। धातुरूपं
शब्दरूपञ्च तिङ्सुबन्ततया व्याकरणप्रसिद्धं रूपशब्दाभिधे
यम्। रूपाभावे लिङ्गमाह न धातुवर्ण इति। लिङ्गं धातु-
प्रकृतिकतया वर्णघटिततया च धातुवर्णयोरभावे कथं
सत्त्वमिति भावः। धातुसहितो वर्णोधातुवर्णः। नाम च
धातुजमाह निरुक्तिइत्युक्तेर्नाम्नः धातुप्रकृतिकतया तन्निषेधेनैव
नामनिषेध इति न पृथगुक्तम्। श्रूयमाणोऽनुसन्धीयमानश्च
शब्दो बोधहेतुरनुसन्धानं च स्वसम्बन्धिज्ञानाधीनं तत्र शब्दा-
नुसन्धायकता विशेषतो लोकवेदयो र्वर्णसन्निवेशरूपाचरा-

णामेव अक्षराणि च रेखाविशेषवत्त्वेन देशभेदेन भिन्नानि। तत्र रेखाभावे कुतोऽक्षरनिष्पत्तिस्तदभावे च कुतः स्मरणं शब्दस्येत्याह न रेखेति। अक्षराभावे च कस्य दर्शनं कस्य वा आधारपत्रादिदर्शनं स्यादित्यभिप्रेत्याह दृष्टेत्यादि। श्रूयमाणश्च शब्दो वक्तुरुच्चारणाधीनं श्रोतुः श्रवणमपेक्षते तयोरुभयाभावे कथं श्रूयमाणतासम्भवइत्यभिप्रेत्याह श्रवणमित्यादि। यत्र यत्र च नञ् न निर्द्दिष्टस्तत्र सर्व्वत्रानुषञ्जनीय एवमग्रेऽपि। वियदाद्यभावे शब्दाद्यभावे च नेह नानास्ति किञ्चन अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदित्यादिश्रुतिरेव मानम्॥ १॥

तस्माद्वा एतस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्व्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवीत्यादिश्रुतौ भूतानामुत्तरोत्तरभूतान्तरगुणाधायकताप्रतिपादनात् वियतश्च सर्व्वभूतगुणाधायकतया तन्निषेधेनैव तत्कार्य्यवाय्वादिनिषेधोऽर्थायात इति सशब्दवियन्निषेधानन्तरं सस्पर्शादिधर्म्मकवायुं निषेधयतीति।

शीतं न चोष्णं न च वेगशाली
वेगो न च स्पर्शसमाश्रयश्च।
शुष्कं न शोषी न च तस्य कर्त्ता
तस्मै नमो ब्रह्मनिरञ्जनाय॥ २॥

शीतोष्णे स्पर्शौ स्पर्शाश्रयस्यानन्तरं निषेधात्। वायोर्भावे शोषादिक्रियाऽभावमाशङ्क्य शोषशोष्ययोरप्यभावात्कुत्र भावइत्याह शुष्कमित्यादि ॥ २ ॥

वायुहेतुकं सधर्म्मकं तेजो निषेधन् स्तौति।

श्वेतो न पीतो न च रक्त एतो
रौप्यं न रत्नं न सुवर्णवर्णः।
चन्द्रार्कवह्निर्न च नोदयास्तौ
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ३ ॥

एतश्चित्रः। शुक्लादयो गुणपराः। रूपाभावे हेतुः रौप्यमित्यादि आश्रयाभावे कथं धर्म्मादिरिति भावः। मूल्यद्वारा सुवर्णस्योत्कर्षाधायको जातिविशेषः सुवर्णस्य वर्णः। चन्द्रार्काभ्यां सहितो वह्निश्चन्द्रार्कवह्निः। उदयास्तौ प्रकाशाप्रकाशौ ॥ ३ ।

तेजोहेतुकं सरसादिधर्म्मकं जलं निषेधन् स्तौति।

तिक्तः कषायो न कटुर्न चाम्लो
माधुर्य्यभागी न रसाः समग्राः।
क्लेदो न तत्कर्म्म न चास्य कर्त्ता
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ४ ॥

तिक्तादयो रसाश्रयपराः। तदभावेनैव रसाभावइत्याह न रसाइति। समग्राइति लवणचित्ररसादेर्लाभाय। क्लेदादिनिषेधः प्राग्वत् व्याख्येयः ॥ ४ ॥

क्रमप्राप्तां सगुणां भूमिं निषेधन् स्तौति ।

वृक्षो न मूलं न च बीजपूरः
शाखा न पत्रं न च पर्व वल्ली ।
छाया न गन्धो न फलं न पुष्पं
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ५ ॥

पार्थिवमध्ये वृक्षस्यैव नानोपयोगितया विशेषतोनिषेधोऽन्यस्याप्युपलक्षणम् । वृक्षाभावे हेतुर्मूलाभावस्तदभावे च बीजपूराभावइति यथोत्तरं निषेधः । वृक्षस्यान्त्यावयवितयाऽवयवसापेक्षत्वादवयवाभावे कथं तत्सत्वमित्याह शाखेत्यादि । पर्व स्कन्दादिग्रन्थिस्थानम् । वल्ली सन्तानवती शाखा । उपयोगित्वस्वभावादपि वृक्षाभावइत्याह छायेत्यादि । गन्धाभावे हेतु र्न फलमित्यादि ॥ ५ ॥

एवं पञ्च भूतानि धर्मसहितानि निषिध्य दिगीश्वरादिकमपि निषेधन् स्तौति ।

ऊर्द्धं न चाधो न शिवो न शक्तिः
पुमान्न नारी न च लिङ्गमूर्त्तिः ।
ब्रह्मा न विष्णुर्न च रुद्रदेव-
स्तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ६ ॥

ऊर्द्धादिव्यवस्थापकदिगभावे दिशः श्रोता इत्यादिश्रुतावीश्वररूपनिरूपणे दिशां श्रोत्ररूपतोक्तिः कथं संगच्छता-

भिलाशङ्का ईश्वरस्याप्यविद्यात्मकशक्त्यैव जगत्कर्तृत्वं न स्वतः न निरोधी नचोत्पत्तिरित्यादिश्रुत्या परमार्थत उत्पत्त्यादिनिषेधात् तथा च तस्याप्यावियिकत्वादसत्त्वमेवेत्याह न शिवइति त्रिगुणात्मकाविद्योपाधिरीश्वर इत्यर्थः। तस्यासत्त्वे हेतुमाह न शक्तिरिति शक्तिर्हि कारणस्थिता कार्य्यसूक्ष्मावस्था कार्य्यानुकूला तथा च कार्य्याणामेवाभावे कुतस्तत्सूक्ष्मावस्थेति भावः। ईश्वराभावे च तल्लीलया परिगृहीतरूमाकाराद्यभावः। तत्र हेतु न च लिङ्गमूर्त्तिरिति पञ्चप्राणदशेन्द्रियमनोबुद्ध्यात्मकं सप्तदशावयवं लिङ्गशरीरं समष्टिरूपं तस्य प्रवेशेनैवेश्वरस्य स्थूलदेहे प्रवेशात्। भूताभावेन च भौतिकानां तेषामभावइति भावः। समष्टीश्वराभावे च व्यष्टिब्रह्मादिदेवाद्यभावइति तेषां निषेधइत्याह ब्रह्मेत्यादि ॥६

कालाभावं कालादिज्ञापकशास्त्राभावञ्च दर्शयन् स्तौति।

अखण्डखण्डौ न मुहूर्त्तदण्डौ
कालौ न जीवो न गुरुर्न शिष्यः।
ग्रहा न तारा न च मेघमाला
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ७ ॥

अखण्डो महाकालः खण्डः क्षणादिः। कालाभावे दश द्विवत्सरः प्राणइत्यादिज्योतिःशास्त्रोक्तप्राणनादिक्रियामानं व्यर्थं स्यादित्याशङ्क्य प्रतिपाद्यपुरुषं प्रति फलविशेषप्रतिपादकस्यैव शास्त्ररूपतया फलसहितप्रतिपाद्यप्रतिपादकानाम-

प्यभाव इष्टएवेत्याह न जीवइति जीवो जीवनं प्राणनक्रिया। गुरुरुपदेष्टा। शिष्यः उपदेश्यः। फलं ग्रहताराादिगतिदृष्टादिज्ञानम्। तेषां सर्व्वेषामप्यभाव इति भावः ॥ ७ ॥

एवमङ्गस्य ज्योतिःशास्त्रस्याभावमुक्त्वाऽङ्गिनो वेदस्यापि तन्मूलकर्म्मणाञ्चाभावकथनेन स्तौति।

वेदो न शास्त्रं न च शौचसन्ध्ये
ध्यानं न जप्यो न च मन्त्रजापः।
होमो न होम्यं न च देवपूजे
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ ८ ॥

वेद इष्टानिष्टसाधनविधिनिषेधबोधकापौरुषेयवाक्यम् शास्त्रं परमपुरुषार्थसाधनं वेदान्तादि। वेदासत्वे नैव तन्मूलस्नानशौचसन्ध्यामननप्रणवतज्जपहोमहवनीयद्रव्यदेवता पूजापूज्यदेवताद्यभावइत्याह न च शौचेत्यादि ॥ ८ ॥

कर्म्माभावे तन्मूलानां कर्म्मफलानां जात्यायुर्भोगाणाम भावइत्युक्त्वा स्तौति।

स्वर्गो नपृथ्वी नगरं नपल्ली
जातावपि स्त्री न च भेदभिन्नौ।
नाहं न च त्वं न पृथक् पृथक् त्वं
तस्मै नमो ब्रह्मनिरञ्जनाय ॥९॥

स्वर्गो दुःखासंभिन्नसुखविशेषस्तद्भोगभूमिश्च। पृथ्वी भोगभूमिः। तद्विशेषो नगरादिः। बहुसमृद्धजनाधिष्ठानं नगरम्। स्वल्पजनाश्रयःपल्ली। जात्यभावमाह जाताविति ब्राह्मणादि जातावपि भेदस्तदाश्रयौ न स्तः जात्यभिमानस्य देहाभिमानमूलकतया तदभावेनैव तन्निवृत्तेरिति भावः देहाभिमानाभावादेव युष्मदादि प्रत्ययव्यवहाराभावमाह न च त्वमिति भेदोभेदाश्रयश्च न स्त इत्यर्थः ॥९॥

किमु वक्तव्यं व्यवहारदशायां परस्परविरोधिनोरपि तस्मिन् ब्रह्मणि द्वयोरपि तयोरभाव इत्युक्त्वा स्तौति।

गम्भीरधीरं न च भावशून्य-
मसारसारं न च पापपुण्यम्।
व्याक्तं नचा व्यक्त मनन्त मन्तं
तस्मै नमो ब्रह्मनिरञ्जनाय ॥ १० ॥

गम्भीरेत्यादौ सर्वत्र समाहारः युगपदेव विरोधिनोर-भावप्रदर्शनाय। गम्भीरत्वधीरत्वे परस्परविरुद्धे शब्दवृत्ती। भावप्रधानो निर्देशः शब्दाभावस्य प्रथममुक्तत्वात्। भावशून्यं भावाभावो भावत्वाभावत्वे च असारमप्रयोजनीयम् सारं प्रयो-जनीयम् तद्भावः च। पापपुण्यं दुःखसुखहेतुर्निषिद्धविधि संसेवनजन्यम्। व्यक्तम् कार्य्यम्। अव्यक्तं कारणम्। अनन्तं नाशशून्यम्। अन्तम् अन्तआद्यजन्यत्वात् नाशवत्। १०।

प्रमादाद्भ्रान्तितो वात्र यत्किञ्चित् स्खलितं मम।
तत् पूयन्तु सुधियो-विनयाञ्जलियाचिताः॥



इतिमहामहोपाध्याय कालिदाससार्व्वभौमभट्टाचार्य्यात्मज श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यविरचिता

ब्रह्मस्तोत्रव्याख्या समाप्ता ।

शाके वह्निनवाश्वेन्दु मानेऽब्दः पूर्णतां गतम् ।
रचितं यत्नतः श्रीमत्तारानाथद्विजन्मना ॥

१७९३ शाके

---

